

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥

॥ श्रीमते रामानन्दाचार्याय नमः ॥

॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥

॥ श्रीमते अग्रदेवाचार्याय नमः ॥

# ॥ श्रीसीतापञ्चायतन स्तोत्रम् ॥

*This text has been prepared by*
*Vishal Pandey (B.Tech IIT Kanpur)*
*with the blessings of*
***Chitrakūṭa Tulasīpīṭhādhiśvara***
***Jagadguru Rāmānandāchārya***
***Śrī Svāmī Rāmabhadrāchārya***

**सीतानाथ समारम्भां रामानन्दार्य मध्यमाम् ।**
**अस्मदाचार्य पर्यन्तां वन्दे श्री गुरु परम्पराम् ॥**

# अथ श्रीसीतापञ्चायतन स्तोत्रम्

वन्दे विदेहतनयापदपुण्डरीकं कैशोरसौरभसमाहृतयोगिचित्तम् ।
हन्तुं त्रितापमनिशं मुनिहंससेव्यं सम्मानशालि परिपीत परागपुञ्जम् ॥ १ ॥

दूर्वादलद्युतितनुं तरुणाब्ज नेत्रं हेमाम्वरांवर विभूषण भूषिताङ्गम् ।
कन्दर्पकोटिकमनीय किशोरमूर्तिं पूर्तिं मनोरथभुवां भुजजानकीशम् ॥ २ ॥

कर्पूरगौर वपुषं शरदिन्दु वक्त्रं नीलाम्बरं सरसिजाक्षमनन्तमाद्यम ।
वामोर्मिलं ललितभूषण भूषिताङ्गं रामानुजं भजमनोऽभयदं निजानाम् ॥ ३ ॥

विश्वम्भरं भरतमम्बुजपत्रनेत्रं नीलाम्बुदामवपुषं कनकाभ वस्त्रम् ।
भक्ताऽभयप्रदमनेक विभूषणाढ्यं जाड्यापहं सुभजतां भजमाण्डवीशम् ॥ ४ ॥

कैशोर मूर्तिमनुरूपमनूपरूपं पञ्चेषु सुन्दरतनुं श्रुतिकीर्तिकान्तम् ।
गौरं सुवर्ण मणिभूषणमम्बुजाक्षं  पीताम्बरं भजमनोऽखिल सिद्धिहेतुम् ॥ ५ ॥

उद्यद्दिनेशकर रञ्जित कञ्जवक्त्रं पिङ्गारुणाब्ज नयनं नयनाभिरामम् ।
सौवर्णवर्ण वसनं रत्नादि भूषं भक्तेष्ट कामदतरुं भज वायुसूनम् ॥ ६ ॥

श्रीसीतापञ्चायतन स्तोत्रं प्रातःकाले पठेत्तुयः ।
इहलोके परेऽवापि तस्य किञ्चिन्नदुर्लभम् ॥ ७ ॥

**॥ इति सुन्दरीतन्त्रोक्तं श्रीरत्नसिंहासनीय श्रीसीतापञ्चायतन स्तोत्रम् ॥**